शब्दाभ्यां समर्पित इत्येवंभूते शिष्ये चिदात्मनि त्वमर्थे सर्वाण्युपसत्तिवाक्यानि समन्वितानीति त्वंपदवृत्तिकथनाय मुनिनोक्तमेवेत्यर्थः ॥ ५५७ ॥

अ० टी०—उक्तमेव स्पष्टयति—शिष्योपसत्तिवचनानीति । परे संघातविलक्षणे प्रतीचि प्रत्यगात्मनि त्वंशब्दवृत्तिकथनायेत्यर्थः । उपसन्नं प्रति तत्त्वमसीत्युपदेशान्महावाक्य उपपन्नस्त्वंशब्दार्थः । अत उपसत्तिवाक्योदाहरणेन त्वंपदवृत्तिविवक्षा लक्ष्यते । स चोपसन्नः शिष्यो नित्यमुक्तः पर एवेति ब्रह्मविपरीतरूपस्य मिथ्यात्वनिरूपणसामर्थ्यसिद्धेर्वाक्यार्थान्वययोग्यप्रत्यङ्मात्रे त्वंपदवृत्तिविवक्षाऽऽद्ये सूत्रे गम्यत इति तात्पर्यार्थः ॥ ५५७ ॥

सु० टी०—ततश्च पदवृत्तिकथनार्थत्वमेव सूत्रयोरित्याह—

उपसदनवचोविचारमार्गा-
त्त्वमितिपदस्य परात्मनीह वृत्तिम् ।
कथयति भगवान्द्वितीयसूत्रे
तदितिपदस्य परात्मनीति भेदः ॥ ५५८ ॥

उपेति । इहाऽऽद्यसूत्रेऽथशब्देनोपसत्तिवाक्यद्वारा त्वंपदस्य वृत्तिमुक्त्वा जन्मादिसूत्रे यत इत्यादिवाक्यार्थविचारेण तत्पदवृत्तिमपि मुनिः कथयतीत्यर्थः ॥ ५५८ ॥

अ० टी०—तस्मात्सिद्धं सूत्रद्वयस्य पदद्वयवृत्तिनिरूपणार्थत्वमित्युपसंहरति—उपसदनेति । परमात्मनि संघातात्परस्मिन्प्रत्यगात्मनि । इह प्रथमसूत्रे पदयोरेवात्र भेदो न पदार्थयोः स्वरूपेण भेद इति दर्शयितुमुभयत्र परात्मग्रहणमिति द्रष्टव्यम् ॥ ५५८ ॥

सु० टी०—ननु सूत्रद्वयेऽपि पदवृत्तिकथनमात्रेणार्थासिद्धेर्वाक्यार्थबोधोपयोगिनी युक्तिरपि वाच्या तथा च वाक्यभेद इति चेत्तत्राऽऽह—

आवृत्त्या वा तन्त्रवृत्त्याऽथ वेदं
सूत्रं युक्तिं वेदवाक्योपयुक्ताम् ।
अप्याचष्टे बृंहणीमन्तरेण
स्वार्थे युक्तिं वेदवाक्यं न पुष्टम् ॥ ५५९ ॥

आवृत्त्येति । अर्थान्तरविवक्षया पुनरुच्चारणमावृत्तिः । बह्वर्थविवक्षया सकृदुच्चारणं तन्त्रम् । ततश्चेदं सूत्रद्वयं सूत्रत्वेन बह्वर्थसूचकत्वात्

**तात्पर्यविषयतत्तदर्थं प्रत्यङ्गत्वेन प्रतिप्रधानं गुणावृत्तिन्यायादावृत्ति-व्याख्यया वा सकृच्छ्रुतस्याप्यर्थद्वयाङ्गत्वेन तन्त्रवृत्त्या वा तत्तद्वेदवाक्योपयुक्तां युक्तिमप्युपदिशतीत्यर्थः । कुत इयं क्लिष्टकल्पनेति चेत्तत्राऽऽह**—बृंहणीमिति । **स्वार्थे गम्भीरार्थविस्तारिणीं युक्तिं विना वेदवाक्यं न पुष्टं न सम्यग्वाक्यार्थबोधनक्षममित्यर्थः ॥ ५५९ ॥**

अ० टी०—ननु कथं वाक्यगतिनिरूपणमात्रेण निमित्तोपादानात्मकमेकमद्वितीयं कारणं सिध्येद्वादिभिस्तु तद्विपरीतस्य कारणस्य युक्तिभिर्निरूपणादिति चेन्नैष दोषो निर्वाक्षेतकारणसमर्थनायाऽऽवृत्तेस्तन्त्रेण वा समाश्रयणोपपत्तेरित्याह—**आवृत्त्या वेति ।** जन्माद्यस्य यतो भवति तद्ब्रह्मेति सूत्रवाक्ययोजनायां स्थितायामस्यैव सूत्रस्याऽऽवृत्त्या वा जन्माद्यस्य यतस्तत्र ब्रह्मणोऽर्थान्तरमित्येवं विभयाऽथवा तन्त्रवृत्त्या नान्यद्ब्रह्मणः कारणं जगत इत्यत्रापेक्षितयुक्तीनामपि संग्रहेणोच्चारणं तत्र वृत्तिस्तया वेत्यर्थः । अनेकार्थविवक्षया सकृद्वाक्योच्चारणं तन्त्रमिति तल्लक्षणमुक्तस्यैव वाक्यस्य तदर्थोपपादनपरतया पुनरुच्चारणमावृत्तिरिति तद्विवक्षा । इत्थमक्षरयोजना–' जन्माद्यस्य यतः ' [ ब्र० सू० १ । १ । २ ] इतीदं सूत्रमावृत्त्या वा तन्त्रवृत्त्याऽथ वा वेदवाक्योपयुक्तां बृंहणीं युक्तिमप्याचष्टे वेदवाक्योपयुक्तिमन्तरेण विनेति वाक्यगताक्षरार्थानुकूलयुक्ति[ व्यति ]रेकेण वेदवाक्यं न पुष्टं तस्मात्तदर्थोपपादकयुक्तिमप्याचष्ट इत्यर्थः ॥ ५५९ ॥

**सु० टी०—एवं सूत्राभ्यामुक्तवाक्ययोः पदार्थद्वये तात्पर्यमपेक्षितमुक्त्वा महावाक्यार्थमुक्तवानित्याह—**

**त्वंपदार्थविषयं समन्वयं**
**तत्पदार्थविषयं ततः क्रमात् ।**
**तस्य शेषमपरं च वर्णय-**
**न्नुक्तवानथ महावचोगतम् ॥ ५६० ॥**

त्वमिति । **तस्य तत्पदान्वयस्यापेक्षितं शेषं न्यायं सर्वज्ञत्वादिसाधकं तृतीयसूत्रे वर्णयन्नित्यर्थः ॥ ५६० ॥**

अ० टी०—एवं महावाक्यगतपदवृत्तिमुक्त्वा क्रमप्राप्तं महावाक्यसमन्वयं निरूपयितुं समन्वयसूत्रमित्याह—**त्वंपदार्थविषयमिति ।** त्वंपदार्थविषयं समन्वयमाद्ये सूत्रे वर्णयंस्ततोऽनन्तरं क्रमात्तत्पदार्थविषयं समन्वयं द्वितीये सूत्रे वर्णयन्नथानन्तरं महावचोगतं समन्वयमुक्तवान्महामुनिरिति योजना । तर्हि मध्ये ' शास्त्रयोनित्वात् ' [ ब्र० सू० १ । १ । ३ ] इतिसूत्रं किमर्थमित्यपेक्षायां तस्योपयोगितामाह—**तस्य शेषमपरं हीति ।**

अयमर्थः—तस्य जन्मादिसूत्रस्य शेषमर्थसिद्धसर्वज्ञत्वसाधनन्यायेन निःश्वासवदबुद्धिपूर्वसृष्टतया वेदस्यानपेक्षत्वलक्षणप्रामाण्याविरोधेन सकलवेदोपादानतया सर्वावभासकज्ञानस्वरूपत्वसिद्ध्यर्थं वर्णयन्मध्ये ' शास्त्रयोनित्वात् ' [ ब्र० सू० १ । १ । ३ ] इतिसूत्रं प्रणीतवानिति ॥ ५६० ॥

सु० टी०–तर्हि तत्पदार्थोपयोगित्वादीक्षत्यधिकरणमप्यादौ स्यादिति चेन्न तेन विनाऽपि तत्सिद्धेरित्याह—

त्वंपदस्य दृशि वृत्तिमद्वये तत्पदस्य च निवेदयन्मुनिः ।
प्रत्यगद्वयपरं समन्वयं शेषिणं पुनरथाब्रवीत्तयोः ॥५६१॥

त्वंपदेति । पदयोरर्थद्वये वृत्तिं निवेद्य तयोः शेषिणं प्रत्यगद्वयाभेदपरं समन्वयमब्रवीदित्यर्थः । पदार्थज्ञानमात्रादज्ञानानिवृत्तेस्तन्निवर्तकमभेदज्ञानं फलवत्त्वाच्छेषीति भावः । ईक्षत्यादेर्वादिनिरासमात्रार्थत्वेन पश्चादुक्तिः ॥ ५६१ ॥

अ० टी०—एवं पदद्वयवृत्तिनिरूपणानन्तरं महावाक्यनिरूपणं क्रमप्राप्तमेव स्पष्टयति—**त्वंपदस्येति** । दृशि प्रत्यगात्मनि त्वंपदस्य वृत्तिमद्वये ब्रह्मणि तत्पदस्य च वृत्तिं निवेदयन्मुनिस्तच्छेषभूतां पदद्वयवृत्तिं प्रथमं निवेदयन्निति यावत् । अथानन्तरं क्रमप्राप्तं तयोः शेषिणं प्रत्यगद्वयपरं समन्वयं प्रत्यगद्वये ब्रह्मण्यैक्यरूपेण समन्वयं पुनरब्रवीदिति योजना । सूत्रत्रयेण पदार्थद्वयपदद्वयशक्यसमन्वयं प्रतिपाद्य चतुर्थसूत्रेण तयोर्वाक्यार्थरूपाखण्डाद्वयानन्दात्मनि समन्वयमब्रवीदित्यर्थः ॥ ५६१ ॥

सु० टी०—समन्वयसूत्रसिद्धानर्थान्संक्षिप्यानुभाषते—

शक्नोति सिद्धमवबोधयितुं च वाक्यं
शक्नोति कार्यरहितं वदितुं च वाक्यम् ।
शक्नोत्यखण्डमवबोधयितुं च वाक्यं
शक्नोति मुक्तिफलमर्पयितुं च वाक्यम् ॥५६२॥

शक्नोतीति । सिद्धार्थे व्युत्पत्तिसमर्थनादित्यर्थः । नियोगादिनिरासान्नाकार्येऽपि शब्दसामर्थ्यादखण्डार्थसिद्धौ महावाक्यस्य फलपर्यवसानमित्यर्थः ॥ ५६२ ॥

अ० टी०—अथ चतुर्थे सूत्रे वाक्यार्थेऽखण्डे समन्वयमब्रवीदित्यादिना विस्तरेण समन्वयसूत्रार्थस्योपपादितत्वात्तदिदानीं संक्षिप्याऽऽह—शक्नोतीति । मानान्तरनैरपेक्ष्येण सिद्धं ब्रह्मात्मवस्त्ववबोधयितुं समर्थं कार्यरहितमिति कार्यशेषत्वरहितं स्वप्रधानमेवेत्यर्थः । अखण्डमिति भेदसंसर्गरहितमित्यर्थः । मुक्तिफलमिति मुक्तिः फलं यस्य तन्मुक्तिफलं तत्त्वसाक्षात्काररूपं ज्ञानमित्यर्थः । स्वार्थे फलवद्विज्ञानजननसामर्थ्यमिति कर्मशेषार्थपरत्वमनेन निरस्तम् । एतेऽर्थाः पूर्वमेव निपुणतरन्यायतः प्रतिपादिताः स्मर्तव्या इति भावः ॥ ५६२ ॥

सु० टी०—तदेवं निर्गुणनिरूपणप्रवृत्तोऽपि सगुणवाक्यमपीत्यादिना स्पष्टब्रह्मलिङ्गानां वाक्यानां समन्वयमाद्यपादस्यास्पष्टब्रह्मलिङ्गानामुपास्ये ब्रह्मणि द्वितीयस्य तादृशमेव ज्ञेये ब्रह्मणि तृतीयस्यार्थं सामान्यतः संगृह्याव्यक्ताजादिपदानामपि ब्रह्मविषयत्वं चतुर्थपादार्थं भूमादिपदार्थकथनेनैव सिद्धमभिप्रेत्याध्यायार्थस्य समन्वयनिरूपणस्य फलं वर्णयति—

एतत्समन्वयनिरूपणमेवमस्मि-
न्बुद्धिस्थतामुपगते सति वाक्यजन्यम् ।
विज्ञानमद्वयगतं न ततोऽन्यदन्य-
त्पुंसोऽपराधकृतमित्युदियात्प्रतीतिः ॥ ५६३ ॥

इति श्रीदेवेश्वरपूज्यपादशिष्यश्रीसर्वज्ञात्ममहामुनेः कृतौ संक्षेपशारीरके प्रथमोऽध्यायः ॥ १ ॥

---

एतदिति । फले नियोक्तुमनुवदति । अस्मिन्निरूपण एवमुक्तरीत्या बुद्धिस्थे सति प्रत्यगद्वयाभेदज्ञानं तदेव वाक्यजमन्यत्तु यद्भेदविषयमापातज्ञानं न तद्वाक्योत्थं किं तु तात्पर्याज्ञानविजृम्भितमिति निश्चयो भवेदित्यर्थः । विचारादपराधविधूनने तु वाक्यान्मुक्तिफलाधीरिति भावः ॥ ५६३ ॥

महाव्रताग्निचिन्मिश्रपुरुषोत्तमनिर्मितौ ।
शारीरकसुबोधिन्यामध्यायः प्रथमोऽगमत् ॥ १ ॥

इति संक्षेपशारीरकव्याख्यायां सुबोधिन्यां प्रथमोऽध्यायः ।

---

१ क ग. र्गुणानि । २ ग. °तीचि ।

अ० टी०---एवं सूत्रत्रयार्थं विस्तरेण प्रतिपाद्य 'ईक्षतेर्नाशब्दम्' ब्र० सू० १ । १ । ५ इत्याद्युत्तरसूत्रगतन्यायसंदर्भं भाष्योक्तमेव सिद्धवत्कृत्य समन्वयाध्यायमुपसंहरति---**एतत्समन्वयनिरूपणमिति** । यथाशास्त्रं यथान्यायमस्माभिः कृतमिति शेषः । समन्वयनिरूपणफलमाह---**एवमिति** । एवमुक्तप्रकारेण समन्वये बुद्धिस्थतामुपगते, सत्यधीतस्वाध्यायस्य समधिगतशब्दन्यायतत्त्वस्य पुंसो यद्वाक्यजन्यं शब्दस्वारस्यजन्यं विज्ञानं तदद्वयगतं प्रत्यग्ब्रह्मैक्यगतं ततोऽन्यन्न भवत्यर्थान्तरगतं न भवत्येवान्यत्तद्विरुद्धार्थविषयमनेकविधं यद्विज्ञानं तत्पुंसोऽपराधकृतं पुरुषदोषनिबन्धनमेवेत्येव प्रतीतिः प्रत्यय उदियादुत्पद्येतेति योजना । वेदान्तवाक्यरूपप्रमाणगतासंभावनापोहेन वाक्यार्थे बुद्धिनियमासिद्धिः समन्वयविचारफलमित्यर्थः ॥ ५६३ ॥

इति श्रीकृष्णतीर्थशिष्यरामतीर्थकृतायां संक्षेपशारीरकटीकायामन्वयार्थप्रकाशिकायां समन्वयाभिधः प्रथमोऽध्यायः समाप्तः ॥ १ ॥